॥ दुर्गा स्तवम् ॥

विराटनगरम् रम्यम् गच्छमनो युधिष्ठिरः ।
अस्तुवन्मनसा देवीम् दुर्गाम् त्रिभुवनेश्वरीम् ॥ १ ॥

यशोदा गर्भसंभूताम् नारायणवर प्रियाम् ।
नंदगोप कुले जाताम् मंगल्याम् कुलवर्धिनीम्॥ २ ॥

कंसविद्रावणकरीम् असुराणाम् क्षयंकरीम् ।
शिलातट विनिक्षिप्ताम् आकाशम् प्रतिगामिनीम् ॥ ३ ॥

वासुदेवस्य भगिनीम् दिव्यमाल्य विभूषिताम् ।
दिव्यांबर धराम् देवीम् खड्गखेटकधारिणीम् ॥ ४ ॥

भारावतरणे पुण्ये ये स्मरन्ति सदाशिवाम् ।
तान् वै तारयसे पापात् पंकेगाम् इव दुर्बलाम् ॥ ५ ॥

स्तोतुम् प्रचक्रमे भूयो विविधैः स्तोत्र संभवैः ।
आमन्त्र्य दर्शनाकांक्षी राजा देवीम् सहानुजः ॥ ६ ॥

नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिण ॥
बालार्क सदृशाकारे पूर्णचंद्र निभानने॥ ७ ॥

चतुर्भुजे चतुर्व क्त्रे पीनश्रोणि पयोधरे ।
मयूर पिंछ वलये केयुरांगद धारिणी ॥ ८ ॥

भासि देवि यथा पद्मा नारायण परिग्रहः ।
स्वरूपम् ब्रह्मचर्यम् च विशदम् गगनेश्वरी ॥ ९ ॥

कृष्णाच्छवि समाकृष्णा संकर्षण समानना ।
बिभ्रती विपुलौ बाहू शक्रध्वज समुच्च्रयौ ॥ १0 ॥

पात्री च पंकजी घंटी स्त्री विशुद्धा च या भुवि ।
पाशम् धनुर्महाचक्रम् विविधान्यायुदानि च ॥ ११ ॥

कुंडलाभ्याम् सुपूर्णाभ्याम् कर्णाभ्याम् च विभूषिता ।
चंद्रविस्पर्दिना देवि मुखेन त्वम् विराजसे ॥ १२ ॥

मुकुटेन विचित्रेण केशबंधेन शोभिना ।
भुजंगा भोगवासेन श्रोणिसूत्रेण राजता ॥ १३ ॥

विभ्राजसेचावबद्धेन भोगेनेवेह मंदरः ।
ध्वजेन शिखिपिंछानामुच्छ्रितेन विराजसे ॥ १४ ॥

कौमारम् व्रतमास्थाय त्रिदिवम् पावितम् त्वया ।
तेन त्वम् स्तूयसे देवि त्रिदशैः पूज्यसेलपि च ॥ १५ ॥

त्रैलोक्य रक्षणार्धाय महिषासुरनाशिनि ।
प्रसन्नामे सुरश्रेष्ठे दयाम् कुरु शिवा भव ॥ १६ ॥

जया त्वम् विजयाचैव संग्रामे च जयप्रदा ।
ममापि विजयम् देवि वरदा त्वम् च सांप्रतम् ॥ १७ ॥

विन्ध्येचैव नगश्रेष्ठे तव स्थानम् हि शाश्वतम् ।
काळि काळि महा काळि खड्ग खट्वांग धारिणि ॥ १८ ॥

कृतानुयात्रा भूत्यैस्त्वं वरदा कामचारिणी ।
भारवतारे ये च त्वां संस्मरिष्यंति मानवाः॥ १९ ॥

प्रणमन्ति च ये त्वाम् हि प्रभाते तु नरा भुवि ।
तेषाम् दुर्लभम् किंचित् पुत्रतो धनदोल्पि वा ॥ २0 ॥

दुर्गात् तारयसे दुर्गे तत्त्वम् दुर्गा स्मृता जनैः ।
कान्तारेष्ववसन्नानाम् मग्नानाम् च महार्णवः ॥ २१ ॥

दस्युभिर्वानिरुद्धानाम् क्वम् गतिः परमानृणाम् ।
जलप्रतरणेचैव कान्तारेष्वटवीषुच॥ २२ ॥

ये स्मरन्ति महादेवि न च सीदन्ति ते नराः ।
त्वं कीर्तिःश्री धृतिःसिद्धिर्ह्रीर्विद्या संततिर्मतिः ॥ २३ ॥

संध्या रात्रिःप्रभा निद्रा ज्योत्स्ना कांतिःक्षमा दया ।
नृणाम् च बंधनं मोहं पुत्रनाशम् धन क्षयम् ॥ २४ ॥

व्याधि मृत्यु भयं चैव पूजिता नाशयिष्यसि ।
सोल्हं राज्यात् परिभ्रष्टः शरणम् त्वां प्रपन्नवान्॥ २५ ॥

प्रणतश्च यथा मूर्ध्नातव देवि सुरेश्वरि ॥
त्राहिमाम् पद्मपत्राक्षि सत्ये सत्या भवस्वनः ॥ २६ ॥

शरणम् भव मे दुर्गे शरण्ये भक्तवत्सले ।
एवं स्तुता हि सा देवी दर्शयामास पांडवम् ॥ २७ ॥

उपगम्यतु राजानम् इदम् वचनमब्रवीत् ।
शृणु राजन् महाबाहो मदीयम् वचनम् प्रभो ॥ २८ ॥

भविष्यद्यचिरादेव संग्रामे विजयस्तव ।
मम प्रसादन्निर्जित्य हत्वा कौरव वाहिनीम् ॥ २९ ॥

राज्यम् निष्कंटकम् कृत्वा भोक्ष्यसे मेदिनीं पुनः ।
भ्रातृभिः सहितो राजन् प्रीतिम् प्राप्स्यसि पुष्कलाम् ॥ ३0 ॥

मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।
ए च संकीर्तयिष्यंति लोके विगत कल्मषाः ॥ ३१ ॥

तेषाम् तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ।
प्रवासे नगरे चापि संग्रामे शत्रुसंकटे ॥ ३२ ॥

अटव्याम् दुर्गकान्तारे सागरे गहने गिरौ ।
ये स्मरिष्यंति मां राजन् यथाहं भवता स्मृता ॥ ३३ ॥

न तेषाम् दुर्लभम् किन्चिदस्मिन्लोके भविष्यति ।
इदं स्तोत्रवरं भक्त्या शृणुयाद् वा पठेत वा॥ ३४ ॥

तस्य सर्वाणि कार्याणि सिद्धिम् यास्यन्ति पांडवाः ।
मत्प्रसादाच्च वः सर्वान् विराट नगरे स्थितान् ॥ ३५ ॥

इत्युक्त्वा वरदा देवी युधिष्ठिरमरिन्दमम्
रक्षां कृत्वा च पान्डूनां तत्रैवान्तरधीयत ॥ ३६ ॥

॥ इति युधिष्टिरकृत दुर्गा स्तवम् समाप्तम् ॥